रङ्गः

रङ्गस्तु द्विविधो ज्ञेयः स्वरपरो व्यञ्जनपरः
कथ्यते लक्षणं तस्य निदर्शनमिति स्फुटम् २०
नकारवैकृतं चात्र नासिक्यं रङ्ग उच्यते
पदमध्ये पदान्ते वा स्वरे च कलशाँ इति २१
व्यञ्जने प्रत्यये यच्च रङ्गस्तेन निदर्शनम्
दाशिवाँ वोऽथ गोमाँ य दधन्वाँ यो महाँ हि षः २२